


SAPTHAGIRI (SANSKRIT)
SPIRITUAL ILLUSTRATED MONTHLY
Volume:10, Issue: 08
November-2023, Price Rs.20/-
No. of pages-24

तिरुमलतिरुपतिदेवस्थानानि

# सप्तगिरिः

आध्यात्मिकसचित्रमासपत्रिका

नवम्बर् - २०२३ रू. २०/-

गजवाहनम्
14-11-2023

तिरुचानूरु श्री पद्मावतीदेव्याः ब्रह्मोत्सवाः
10-11-2023 तः 18-11-2023 पर्यन्तम्

sivaprasadperumu

# गीतामृतम्



**श्रीभगवानुवाच -**

यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ।
समदःखसुखं धीरं सोऽमृतत्वाय कल्पते।।

नासतो विद्यते भावो नाभावो विद्यते सतः।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः।।

(भगवद्गीता २-१५-१६)

श्रीभगवान् उवाच हे अर्जुन!

भावः - यः पुरुषः सुखे प्राप्ते हर्षं, दुःखे प्राप्ते विषादं न प्राप्नोति, यं च शीतोष्णादि द्वन्द्वानि न पीडयन्ति सः पुरुषः मोक्षार्हः भवति। यत् नास्ति तस्य अस्तित्वं नास्ति। यत् अस्ति तस्य असद्भावः नास्ति। सदसतोः यथार्थस्वरूपं तत्त्वज्ञाः ज्ञातुं पारयन्ति।

# सङ्कीर्तनम्



**भगवति भुवनजननि**

भगवति भुवनजननि तव चिन्मयचरणकमलरतचित्तम्
कुरु मां कुरु मां, हे करुणामयि वितर विभास्वरवित्तम्
मातर्मङ्गलमयि हर हर मम मालिन्यं हर दैन्यम्।
पराजयेथाः पृथुपापनां पुण्यविघातकसैन्यम्।।
विकृतिविहारपरां मे प्रकृतिं परिवर्तयितुं देहि।
तव शुभशक्तिं सर्वसमर्थां मम हितमिदं विधेहि।।

दिव्यदयामयि दुरितदुरिच्छां दारय तारय हीनम्।
परमपदे त्वरितं स्थापय मां तामसगर्तविलीनम्।।
सुप्तात्मानं प्रतिबोधय मम शोधय सकलं सत्त्वम्।
उदये प्रेरय भगवद्भासं भास्करमविकलतत्त्वम्।।

अमितोदारमहामातर्मम हृदयं कुरु निजधानीम्।
भजे सदाहं त्वां हि भगवतीं भक्त्या नतो भवानीम्।।

- चिन्मया समिती

सम्पादकीयम्



# पद्मावती वैभवम्

सुन्दरे भूलोके पद्मावतीदेव्याः अवतारकथा महाद्भुततया विवृता वर्तते। सहस्रदलयुते स्वर्णपद्मे सा माता 'पद्मावती' रूपेण आविर्भूता। सः समयः आश्चर्यकरः। श्रीवेङ्कटेश्वरः 'श्रीनिवास' रूपेण कथमभूदिति विषयं ज्ञास्यामश्चेत् अस्याः वेलायाः सन्दर्भेऽपि अवगतः भवति। अनेन लोककल्याणार्थम् पद्मावतीदेवी - आनन्दनिलययोः भूलोकागमनस्य दिव्यवृत्तान्तः ज्ञायते।

'कलौ वेङ्कटनायकः'! इति प्रशस्त्या, भूलोकवैकुण्ठं तिरुमलः प्राप्तः वेङ्कटेश्वरः श्रीमहालक्ष्म्या विना भक्तकामनाः पूरयितुं स्वमशक्तः इति मत्वा कोल्हापुरक्षेत्रे स्थितायाः महालक्ष्म्याः पार्श्वे गत्वा दशवर्षाणि यावत् मातुः दर्शनार्थं तपं कृतवान्। तदा अशरीरवाण्याः आदेशानुसारं स्वर्णमुखरी नदीतीरं प्राप्य, पद्मसरोवरं प्रतिष्ठापितवान्। तत्रापि द्वादशवर्षाणि यावत् महालक्ष्म्याः दयानिमित्तं तपं कृतवान्।

एकस्मिन् कार्तिकमासे (सौरमानानुसारं) शुक्ल पञ्चमी शुक्रवासरे अभिजित्लग्ने श्रीमहालक्ष्मीः पद्मसरोवर दिव्यजलेषु सहस्रदलयुते प्रकाशमान स्वर्णपद्मे आविर्भूता। एवमुद्भूतायाः श्रीमहालक्ष्म्याः नाम 'पद्मावतीदेवी' इति ब्रह्मादिदेवाः कृतवन्तः। पद्मोपरि प्रकाशमानां ताम् ''अलर्मेल्मङ्ग'' इति केचन स्तुतवन्तः। सा माता झटिति जगत्कल्याणाय परितप्यमानस्य तिरुमलेशस्य समीपे आगतवती। श्रीवेङ्कटेशः स्वस्य कण्ठे स्थितां मालां तस्याः कण्ठे अलङ्कृत्य, तामालिङ्गनं कृतवान्। ततः स्वस्मिनः हृदये 'व्यूहलक्ष्मी' रूपेण तां प्रतिष्ठाप्य तिरुमलं प्राप्तवान्। किन्तु ब्रह्मादिदेवानां प्रार्थनया तत्रैव अवतृते पद्मसरोवरतीरे एव ''अलमेलुमङ्गा'', ''पद्मावती'' नामभ्यां श्रीस्वामिनं विना स्वतन्त्रेण 'वीरलक्ष्मी' रूपेण अर्चामूर्तिरूपेण पूजाः स्वीकुर्वती वरान् प्रसादयति। तदा ब्रह्मादिदेवैः 'श्रीपद्मावतीमात्रे निर्व्यूढं ब्रह्मोत्सवं अधुनापि वैभवेन आचरन्तः सन्ति। मुख्यतया उत्सवानां चरमे 'पञ्चमीतीर्थ' दिने तिरुमल श्रीस्वामी उपायनरूपेण शाटिकारवलिकां, हरिद्रा कुङ्कुम, आभरणानि, सक्तुनिर्मितान् पदार्थान् गजोपरि स्थापयित्वा मात्रे प्रेषयति। तमाचारं सम्प्रदायतया इदानीमपि आचरन्ति।

माता पद्मावती साक्षात् आनन्दनिलयस्य दयास्वरूपम्। सा सर्वासुवेलासु सर्वेषु प्रदेशेषु, सर्वावस्थासु भक्तकामनाः पूर्णीकरोति। तदर्थमेव श्रीवेङ्कटेशं सम्प्राप्तवती। भक्तानां प्रार्थनाः श्रुत्वा, वेङ्कटेशाय श्रावयित्वा तेषां वाञ्छाः शीघ्रतया पूर्णीकरोति। तिरुमल आनन्दनिलयस्य वक्षस्थले 'व्यूहलक्ष्मी' रूपेण, तिरुचानूरु मध्ये 'पद्मावतीदेवी' रूपेण, 'अलमेलुमङ्गा' रूपेण च अर्चामूर्तितया प्रकाशमाना मातु सती सर्वान् लोकान् प्रकाशयति परमदयामयी श्रीपद्मावती माता।

एभिर्विशेषगुणैः प्रकाशमाना पद्मावती 'पञ्चमीतीर्थ' दिने, ततः दशदिनात्पूर्वं प्रत्येकस्यां वेलायां महाराज्ञीव शेषवाहने 'अनन्तलक्ष्मी' रूपेण, हंसोपरि 'सरस्वती' इव, कल्पवृक्षे 'कामितार्थप्रदायिनी' इव, गजवाहनोपरि 'गजलक्ष्मी' रूपेण, गरुडवाहनोपरि श्रीवेङ्कटाद्रिलक्ष्मीः इव हनुमद्वाहने 'सीतालक्ष्मी' रूपेण एवं श्री आनन्दनिलयस्य पत्नी अलमेलुमङ्गा कार्तिकब्रह्मोत्सववेलासु दर्शनं यच्छति। तासु वेलासु सर्वेऽपि भक्ताः भागं गृहीत्वा नेत्राभ्यां वीक्ष्य कीर्तयन्तः सन्तः आध्यात्मिकानन्दान् प्राप्नुवन्त्विति एवञ्च पुनः भक्तलोकम् आह्वयति 'सप्तगिरि' मास पत्रिका।

॥ ओम् श्रियै नमः॥

# नवम्बर् २०२३

सम्पुटिः-१० सञ्चिका-०८

श्रीशोभकृत्संवत्सरस्य आश्वयुजकृष्णचतुर्थी तः
श्रीशोभकृत्संवत्सरस्य कार्तिककृष्णतृतीयापर्यन्तम्-१९४४




**मुखचित्रम्** – तिरुचानूरु, श्रीपद्मावतीदेव्याः गजवाहनम्।

**अन्तिमरक्षापुटः** – तिरुचानूरु, श्री पद्मावतीदेव्याः चक्रस्नानम्।


## सङ्केतः

प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९, २२६४३६०
सूचनानाम्, आक्षेपाणां च कृते
सम्पर्कं कुर्वन्तु -
sapthagiri.helpdesk@tirumala.org



एका पत्रिका : रू.२०/-
वार्षिकग्राहकत्वम् रू.२४०/-
आजीविक ग्राहकत्वम् रू.२४००/-


*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*


तिरुमलतिरुपतिदेवस्थानम्

# सप्तगिरिः

आध्यातिमकसचित्रमासपत्रिका








# दीपावल्याः वैशिष्ट्यम्

- आचार्य जी. पद्मनाभम्
चरवाणी - ९२४७३२८२८६

श्रीकृष्णेन नरकासुरसंहारात् दिनस्य अस्य नरकचतुर्दशीति नामागतमिति वदन्ति। दुष्टशक्तौ सच्छक्तिविजयचिह्नत्वेन दीपप्रज्वलनमाचर्यते। हिमलायपर्वतान्तर्गत-प्राग्ज्योतिषपुरदुर्गे राक्षसराजः नरकासुरः निवसतिस्म। भूमिपुत्रः देवताः पीडयित्वा इन्द्रसिंहासनं स्वाधीनञ्चकार। देवमातुः अदितेः कर्णकुण्डलानि बलादपहृतवान्। बह्वीः स्त्रियः अवमान्य कारागारबद्धाश्चकार। नरकबाधानिवारणाय इन्द्रेण प्रार्थितः श्रीकृष्णः सत्यभामासहितः प्राग्ज्योतिषपुरमागत्य युद्धं प्रकटितवान्। दुर्गरक्षकस्य मुरासुरस्य शिरःच्छेदं चकार। सप्तमुरासुरपुत्रान् जघान। स्वयं युद्धाय आगतं नरकासुरं सुदर्शनचक्रप्रयोगेन निर्जीवञ्चकार।

तदा भूदेवी आगत्य वराहावतारे मम भवत्संसर्गात् नरकासुरः प्रादुर्बभूव । दुराक्रमणेन तेन आनीतं सर्वं धनं मन्निकटे वर्तते इति सा कृष्णाय समर्पितवती । ततः कृष्णः प्राग्ज्योतिषपुरे बद्धाः सर्वाः स्त्रियः कारागाराविमुक्ताःकृत्वा नरकपुत्रं भगदत्तं भूदेवीप्रार्थनया पट्टाभिषिक्तं चकार। ततः नरकबाधाविनाशात् सर्वे देवाः सानन्दं दीपमालिकाः प्रज्वालयामासुः। दीपावलीपर्वदिने अभ्यङ्गनस्नानमवश्यं कर्तव्यम् । अस्मिन् सन्दर्भे अग्निकणद्योतकाः "टपाकायाः" इत्यादयः नरकासुरे प्रयुक्त मारणायुधचिह्नानि भवन्ति।

केषुचित्प्रान्तेषु नरकासुरमरणदिनत्वात् तद्विग्रहं निर्माय दाहयन्ति स्म।

नरकासुरस्य नरकचुतर्दश्याः कोऽपि सम्बन्धो नास्तीति विदुषा वेंकट सुब्रह्मण्यशास्त्रिणा पत्रिकाद्वारापि प्रकटितम्। नरकात् दुर्गतेः उद्धरणचतुर्दशीदिनमिति निर्णय सिन्धावेवं-प्रकटितम्।

**आश्वयुक्कृष्णपक्षस्य चतुर्दश्यां विधूदये ।**
**तिलतैलेन कर्तव्यं स्नानं नरकभीरुणा ।।**

कृष्णचतुर्दश्यां चन्द्रोदयकाले तैलाभ्यङ्गनस्नानमाचरणीयमिति पद्मपुराणोक्तिः। नरकशब्दस्य नरकं निरयमित्येवार्थः नतु नरकासुरः। नरकभीत्या त्रिकालाबाधितया नरकचुर्दशीपर्वदिनमिति सर्वैरवगन्तव्यम्। विद्वान् वेदलक्ष्मीनारायणशास्त्रिणाप्ययमेव विषयः प्रकटितः। नरकशब्दः जनकशब्दवत् वंशनामैव। जनशब्दस्य नरशब्दस्य कप्रत्यययोगात् शब्दद्वयं निष्पन्नम् । नरकशब्दस्य बिरुदवाच्यत्वेन प्रबलं साक्ष्यं वर्तते। हरगौरी संवादात्मिकग्रन्थे कामरूपदेशपालकेषु २५ सांख्याकाः राजानः निर्दिष्टाः -

**जसनागभरतामर जहायुधपपश्चिलाः।**
**आमसाम्यामनुगोयामुरेशि नरकान्वये ।।**

कालिकापुराणे नरकः कश्चित् एकयुगान्तं राज्यमपालयदिति वर्णितम् । अत्र नरकः २८ तमे त्रेतायुगे जातः द्वापरान्ते दिवङ्गतः इति रामावतारान्ते जातेन कृष्णेन मरणमवापेति उक्तत्वात् सः एकयुगपर्यन्तं राज्यपालनञ्चकारेति सुदृढं निश्चीयते। रामकृष्णावतारयोर्मध्ये सम्पूर्णः एकः युगः अतीतः इति प्रमाणमपि वर्तते। सहस्रवर्षावधि एकः युगः इति चतुर्युगे महाद्वापरे नरकवंशजः अन्तिमः श्रीकृष्णस्य समकालिकः जातः इति कथनं सुसङ्गतं भवति ।

दुरभिमानी महागर्वी ब्राह्मणस्त्रीपीडकः दुष्टचेष्टाफलात् वंशनामकः नरकः एव नरकासुरः इति व्यावहृतः। दैवप्रार्थनया सत्यभामासहितकृष्णेन हतः इति कालिकापुराणात् कामरूपदेशचरित्रात् यथार्थ स्थितिनिर्णयः कृतः समुचितः भाति। दीपामालिकाभिः लक्ष्मीदेव्याः नीराजनसमर्पणदिनत्वात् दीपवली नामकृतम्। नरकलोकवास्येभ्यः दीपावलीकल्पनात्

दीपावलीत्यपि व्यवहरन्ति हिन्दूमतसंस्कृतिसम्प्रदायस्य दीपावलीपर्वदिनमेकमद्भुतं चिह्नम् ।

१. राक्षसराजः बलिचक्रवर्ती विष्णुपादाहतेन पाताललोकं प्रेषितः इति महोत्सवदिनमिव जनाः परिगणयन्ति।

२. श्रीरामपट्टाभिषेकदिनत्वात् महोत्सव पर्वदिनमिदम् ।

३. विक्रमशकस्थापकविक्रमार्कचक्रवर्तिनः पट्टाभिषेकदिनत्वात् महोत्सवदिनमिदम्।

४. लक्ष्मीदेवी अस्मिन् दिने एव भूलोके प्रतिगृहमागत्य परिभ्रमतीति विश्वासात् सर्वे स्वगृहं शुचीं कुर्वन्ति।

महाराष्ट्रदेशे दीपावली पञ्चदिनात्मक पर्वदिनम् ।

वामनमूर्तिः बलिं पातालं पादाहत्य संप्रेष्य कारागारबद्धदेवताः विमुक्ताश्चकार। ततः विमुक्ताः देवताः लक्ष्मीदेव्यासाकं क्षीरसागरं निनाय। ताः देवताः बहुकालपर्यन्तं तत्रैवासन् । कारागारात् देवताविमुक्तिदिन चिह्नतायापि दीपावलीपर्वदिनमाचरन्तः सर्वे लक्ष्मीपूजां प्रधानकार्यत्वेन आचरन्ति। नूतनवरानाहूय विशेषतया नूतनवस्त्राणि समर्प्य तान् सत्कुर्वन्ति।

हिन्दूदेशे विविधप्रान्तेषु विविधतिथिषु दीपावलीं उगादि-दीपावळीति समाचरन्ति। गुजराती - उत्तरादिप्रजानां मुख्यपर्वदिनमिदम्। तत्रस्थाः पुस्तक, वाहन पूजां कुर्वन्ति। दीपावल्यर्थं मृत्प्रमिदेषु घृतं वा अन्यत्तैलमुपयुज्य दीपान् प्रज्वालयन्ति। दीपप्रज्वलनाय सहस्राधिकरूप्याण्यपि व्ययीकुर्वन्ति।

तमिलदेशे नरकासुरपुत्र भगदत्तमूलात् दीपावलीं पर्वदिनमाचरन्तीति केचिद्वदन्ति। भूदेवी भर्तारं विष्णुं संप्रार्थ्य नरकासुरमरणानन्तरं वैष्णवास्त्रं संप्राप्य पुत्राय भगदत्ताय दत्तवती। कौरवपक्षस्थेन भगदत्तेन तद्वैष्णवास्त्रं अर्जुनोपरि प्रयुक्तम् । श्रीकृष्णः तन्निरोद्धुं अर्जुनस्य पुरतः तस्थौ। तदा वैष्णवास्त्रं निस्तेजं भूत्वा कृष्णकण्ठं प्रदक्षिणीकृत्य प्रशान्तमिति, नक्षत्र मालेव पुष्पमञ्जरीव कृष्णकण्ठे स्वल्पं स्वल्पं जलन्मालेव, तममिति वदन्ति। एतच्चिह्नतया दीपावली पर्वदिनमाचरन्तीति पौराणिकगाथा । बालाः आन्ध्रभाषायां काकरोत्तुलु नाम्ना स्वल्पाग्निकनप्रसारक प्रस्पुरच्छलाकाः हस्ते धृत्वा कृष्णकण्ठे विष्णुचक्रमिव भ्रामयन्ति।

**दीपवाली - बलिचक्रवर्ती -** नरकासुरस्य दीपवल्याः सम्बन्धो नास्तीति बहुपण्डितवादः । दीपावल्याः बलिचक्रवर्तिना सम्बन्धयोगत्वेन एका कथा प्रसिद्धा एवं वर्तते -

भारतदेशे कस्य चित् राक्षसराजस्य, बहोः कालानन्तरं अपुत्रस्य तस्य ज्योतिष्कादेशानुसारं पूजाविधानात् पुत्रः जातः। तत्पुत्रोत्सवाय विष्णुना विना सर्वाः देवताः आहूताः। कुपितः विष्णुः "जातः अयं बालः याचितं यं कमपि ब्राह्मणमतृप्तं कृतश्चेत् विनाश सम्भविष्यतीति शशाप।" सः बालकः एव बलिचक्रवर्ती बभूव। विष्णुः वामनरूपेण आगत्य पादत्रयभूमिं याचित्वा तृतीयपादाघातेन तं बलिं पातालं प्रेषयामास। स्वर्गमाक्रम्य देवताबाधाकरणात् अदितिप्रार्थनया देवताप्रीत्यर्थं बलेः पाताललोकप्रेषणदण्डनात् संतृप्ताः देवताः दीपावलीं प्रज्वलयामासुरिति प्राचीन कथा। एवमेव बल्यनुचराः स्वप्रभोः आत्मशान्त्यर्थं पूजया दीपावलीं प्रज्वालयामासुरिति वदन्ति। एवं बलिचक्रवर्तिनः प्रीतिदायकत्वेन दीपावळी समारब्धेति केषाञ्चिदभिप्रायः।

अत्र आध्यात्मिकरहस्यं अवगन्तव्यम्। नरकासुरः अस्मास्वेव वर्तते। आदिवराहभूदेव्योः पुत्रः नरकासुरः । प्रकृतिपुरुषसंयोगाज्जातोऽयम्। गर्भस्थस्य तस्य पूर्वजन्मस्मृतिरागता। ज्ञानोदयः जातः। प्रसूतिवायुना बहिरागतस्य तस्य अज्ञानं प्रादुर्बभूव। प्रथमतः प्राग्ज्योतिषपुरस्थस्य तस्य स्वमाता भूदेवीति ज्ञानं नासीत्। माहिष्मतीपुर्यामेव बहुकालं यापितवानयम्। प्राक्ज्योतिर्नाम पूर्वज्योतिः अर्थात् आत्मवस्तु। आत्मवस्तुज्ञानाय वयं शरीरे प्रविशामः। ईश्वरानुग्रहार्थं ईश्वरदर्शनार्थं अस्माकमत्र आगमः। अत्र आगमनानन्तरमेव नरकासुरः प्रग्ज्योतिषपुरस्य दूरे माहिष्मती पुरे कालं यापयतिस्म। माहिषी नाम महिषप्रवृत्तिः। मुरनिशुम्भहयग्रीवनामक दुष्टमित्रस्नेहं चकार। अर्थात् सत्त्वरजस्तमोगुणसाङ्गत्यं चकार। एतत्त्रि गुणैः भ्रमन् प्राग्ज्योतिषपुरात् माहिष्मतीपुरमागतोऽयम्।

सः चतुर्मुखब्रह्माणमधिकृत्य तपश्चकार। मरणमेव मम मास्तु इति तपः फलतया ययाचे। ब्रह्मा केवलं मातृतः एवं मरणं स्यादिति वरं ददौ। मम माता केति अन्विष्यापि न ज्ञातवान् । माहिमष्मतीपुरे (अज्ञाने आसीत्) प्राग्ज्योतिषपुरं नाम भूमिरेव स्वमातेति तस्य ज्ञानं नासीत् । ततः अदितेः कुण्डलानि अपहृतवान् । दितिर्नाम खण्डः। अदितिर्नाम अखण्डः। खण्डयितुमशक्यः आकाशः। आकाशं न कोऽपि खण्डयितुं शक्तः। एकत्वेन विद्यमानः आकाशः। आकाशे प्रकाशमानौ द्वौकुण्डलौ सूर्यचन्द्रावेव। सूर्यचन्द्रयोः चलनमस्ति।

तयोश्चलनदस्माकं आयुः क्षीणोति। सूर्यचन्द्रोदयास्तमयैः अस्माकं आयुः क्रमशः क्षीणोति।

नरकासुरः बहून् राज्ञां हत्वा तन्पुत्रीन् आनयति स्म। स्वबन्धनेन आनीताः स्त्रियः कापि नानुभूतवान्नरकासुरः। षोडशसहस्रकन्याः आनीय कारागारबद्धाश्चकार। नरकासुरवधानन्तरं श्रीकृष्णः नरकासुरस्य अन्तःपुरं जगाम। ताः सर्वाः स्त्रियः कृष्णं दृष्ट्वा अयं मम भर्ता भवत्विति स्वहृदि भावितवत्यः आसन्। श्रीकृष्णः एताः सर्वाः अपि गजदन्तोपरि निवेशयित्वा द्वारकानगरं प्रेषयामास। ततः इन्द्रदर्शनानन्तरं षोडशसहस्रकन्यकाभ्यः षोडशसहस्रान्तः पुरानि निर्माय एक एव षोडशसहस्ररूपैः परिणीतवान्। अर्थात् अनन्तविभूतयः सर्वाः अपि सर्वेश्वरसम्बन्धिन्यः एव। नरकः चतुर्दशी कन्यां परिणीतवान्। ब्रह्मवरानुसारं नरकासुरः मातृहस्ते एव मर्तव्यः।

नरकासुरस्य माता भूदेवी। भूदेव्यंशः एव सत्यभामारूपेण आगता। तस्याः नाम्नि एकं रहस्यं वर्तते। सत्यं नाम परिणामरहितम्। प्रपञ्चः सर्वोऽपि परिणामशीलः एव। परमेश्वर एक एव परिणाम रहितः। ब्रह्मपदार्थः परिणामरहितः। ईश्वरमाधारीकृत्य जगद्विपरिणमते। सत्यं परिणामरहितम् । तत् सत्यं 'भा' इति। भा नाम संपत्। सत्यं कान्तितः आगच्छती सम्यत्। भूमाविमां संपदं वयं पश्यामः। ईश्वर भूसम्पदेव गरुत्मतः शरीरोपिर कृष्णेन साकं दृश्यते। एवं नरकासुरः भूदेवी हस्ते एव मृतः। सत्यभामा ईश्वरपत्नी भूसम्पदेव किल। सर्वसम्पत् राशीभूता कृष्णपार्श्वे एव वर्तते। लक्ष्म्याः अंशः एवं रुक्मिणी भूदेव्याः अंशः एव सत्यभामा।

सत्यभामया बाणप्रयोगः कृतः नरकासुरः अमावास्यायां हतः। देवताभिः दीपाः प्रज्वालिताः। भगदत्तः प्राग्ज्योतिषपुरे पट्टाभिषिक्तः जातः। अतः इयं भगवल्लीला। सत्यभामाहस्तमृतस्य नरकासुरस्य भूप्राप्तिरेव । एवं सर्वेषां शरीराणि भूमिमेव प्राप्नुवन्ति। मातृहस्ते मरणं नाम शरीरस्थितिज्ञानम्। आत्मतत्त्वज्ञानम्। एतस्मादेव प्रकाशमानाः दीपाः दीपावळ्यश्च आगताः। नरकासुरवधात् अस्माकं जन्मवृत्तान्तः, अस्माकं प्रस्थानं, निवेशितम्। प्राग्ज्योतिषपुरमिति दीपावळी पर्वदिनमिति महात्मभिः महर्षिभिः नामकृतम्।

कृष्णं कमलपत्राक्षं पुण्यश्रवणकीर्तनम् ।
वासुदेवं जगद्योनिं नौमिं नारायणं हरिम् ।।



## नीतिकथा

# सत्यप्रियः काष्ठिकः



एकः काष्ठिकः काष्ठच्छेदनार्थं वनं गच्छति। अनवधानात् तस्य हस्तात् कुठारः जले पतति। सः चिन्ताकुलः भवति। तदा तत्र देवः आगच्छति। देवः जले मज्जति। सुवर्णकुठारं गृहीत्वा बहिः आगच्छति। सः वदति, " अपि एषः तव कुठारः?" काष्ठिकः वदति - "न एषः मम कुठारः?" तदनन्तरं देवः रौप्यकुठारं दर्शयति। काष्ठिकः तदपि न स्वीकरोति। अन्ते देवः लोहकुठारम् आनयति। काष्ठिकः वदति, "आम्, एषः एव मम कुठारः।" प्रसन्नः देवः तस्मै सर्वान् कुठारान् यच्छति। अहो काष्ठिकस्य निःस्पृहता सत्यप्रियता च।





भक्तकवयित्री मातृश्री

# तरिगोण्ड वेङ्कमाम्बा

डा. के.सूर्यनारायण रेड्डी
चरवाणी - ८१०६५७८२५०

(तदनन्तरम्)

**वेङ्कटाचलमाहात्म्यपद्यकाव्यवैशिष्ट्यम्** :- वेङ्कमाम्बायाः आन्ध्रवेङ्कटाचलमाहात्म्य ग्रन्थस्य मूलग्रन्थः संस्कृतवेङ्कटाचल माहात्म्यग्रन्थः। वराहपद्मभविष्योत्तर ब्रह्माण्डभागवतादि द्वादशपुराणभागेभ्यः सङ्कलिते संस्कृत ग्रन्थे १५७ अध्यायाः १०७७१ श्लोकाश्च वर्तन्ते।

वेङ्कमाम्बा तु केवलं वराह, भविष्योत्तर पद्मपुराणभागेभ्यः मूलकथां स्वीकृत्य प्राचीनकवेः भक्तपोतन भागवतमार्गमनुसृत्य स्वेच्छया स्वतन्त्रतया काव्यमिदामान्ध्रीकृतवती । प्रथमत्रिषु आश्वासेषु तिरुमलक्षेत्रे श्वेतवराहस्वामिनः आविर्भावप्राचीनगाथा प्रधाना भवति। अयं वराहपुराणभागः। चतुर्थपञ्चमाश्वासयोः वेङ्कटेश्वरस्य आकाशराजपुत्रिकया पद्मावत्या परिणयकमनीयगाथा वर्णिता। अयं भविष्योत्तरपुराणभागः। षष्ठाश्वासे आदिलक्ष्मीः अलमेल्मंगमाम्बारूपेण पद्मसरोवरे आविर्भूतिपवित्रवृत्तान्तः वर्णितः। अयं पद्मपुराणभागः। मूलमनुसृत्य काव्ये भागत्रये विद्यमानेऽपि इतिवृत्तस्वरूप आनुपूर्विकतया एकसूत्रतां मनोज्ञतया पालितवती।

इयं प्रबन्धकथासंविधाने अनिदंपूर्व वस्त्वैक्यं भास्वद्भक्तियोगक्रमरम्यतया स्वप्रतिभया स्थापितवती। संस्कृताभिमानीयं इष्टदेवताप्रार्थनां संस्कृतश्लोकेनैव कृतवती। चतुर्थषष्ठाश्वासयोः संस्कृतश्लोकाश्च दृश्यन्ते।

इयं कवितातपस्विनी तरिगोण्डे अक्षरशारदासाक्षात्कारं प्राप्तवती। अवतारिकायाम् अक्षरमातृकाणां, मानसिकार्चनां भक्तिप्रपत्तिभिः निर्वहणं विशेषांशः एव। अवतारिकायां सुकविस्तुतिं कृत्वा कुकविनिन्दां परित्यक्तवती।

वेङ्कटाद्रिमहिमानं पद्यकाव्यरूपेण लेखनं मशकस्य समुद्रलङ्घन प्रयत्नवद्भवति। एतत्कष्टकार्यमपि कालिदासः इव, कृत्वा सफलतां प्राप्तवती । स्त्रीपात्रमनस्तत्वचित्रणे अद्भुतप्रतिभामियं प्रदर्शितवती। वकुलादेव्याः लक्ष्मीदेव्याः पद्मावतीदेव्याः पात्रचित्रणनैपुण्यमत्र उदाहरणतया वक्तुं शक्यते।

**संशोदनम् - अक्टोबर् मास पत्रिकायां द्वितीय पुटे श्री पद्मावतीदेव्याः ब्रह्मोत्सवविशेषाणां स्थाने श्री स्वामिनः ब्रह्मोत्सवविशेषाः आगतः। क्षम्यताम्।**

भक्तियोगेन अवतारिकायाम् अष्टभिःपद्यैः हृद्यतया उदात्ततया तिरुमलक्षेत्रं वर्णितवती। रसवदनेकसन्निवेशाः उदाहरणतया अत्र प्रदर्श्यन्ते -

१.लक्ष्मीःवेश्यावेषेण, श्रीहरिः विटवेषेण, ऋषीणां यज्ञशालाप्रवेशः।२. शौनकादिमहर्षीणां वेङ्कटेश्वरदर्शन सन्निवेशः। ३. वेङ्कटेश्वरेण नारायणपुर ज्यौतिष, भविष्यत्कथनम् । ४. तिरुचानूरु पद्मसरोवरे व्यूहलक्ष्मीः आविर्भूय स्वामिवक्षःस्थलवासशुभ मनोहरसन्निवेशः।

५. लक्ष्मीवेङ्कटेश्वरयोः विनोदसम्भाषणं तद्वारा कलियुगे वेङ्कटेश्वरावतार- प्रधानप्रयोजनस्य मनोहरतया आविष्करणम्। एवं निराडम्बरतया रसातिक्रमणं विना, अस्याः भक्तिकाव्यं सुललितपदैः आन्ध्रकविपण्डितहृदयरञ्जकं सत् १८ शताब्द्यां चतुर्थपादे आन्ध्रसाहित्याकाशे समुज्ज्वलन्नक्षत्रमिव भासते । अस्याः नामस्मृत्यर्थं तिरुमलतिरुपति देवस्थानयाजमान्येन सहस्राधिकजनैः एकसमये भोक्तुं नित्यान्नदान विशाल भोजनशाला वेंगमाम्बाभवनमिति निर्मिता अद्य भारतदेशे सुप्रसिद्धिं प्राप्ता विलसति।

**वासिष्ठरामायणम् -** श्रीमद्रामायणरचनायाः पूर्वमेव श्रीरामाय वसिष्ठेन प्रोक्तमिदं वासिष्ठरामायणम् - अस्य आन्ध्रभाषायां द्वावनुवादौ स्तः - एकः १४-१५ शताब्द्याः मध्ये एव मडिकि सिंगन कृतपद्यानुवादः। अष्टमशताब्द्युत्तरभागे तिरुमलस्थमहायोगिन्या वेंगमाम्बया रचितद्विपदानुवादकाव्यम्। लघुयोगवासिष्ठ रामायणमेव काव्यस्यास्य मूलम् । इयं वाल्मीकिमहाकविकृत वाशिष्ठमहारामायणात् विषयं स्वीकृत्य स्वानुभवेन स्वेच्छया सम्यक् सङ्ग्रहेण द्विपदच्छन्दसि अनूदितवती। तात्त्विकविषयाणां, सामान्यजनानां सुलभावबोधाय पद्येभ्यः द्विपदानुवादः श्रेयस्करः इति सम्भाव्य काव्यमिदं वेङ्गमाम्बा रचितवती । काव्यविषयः वेदान्तः। अत्र उपदेशकः वशिष्ठमहर्षिः । दिव्योपदेशश्रोता अवतारमूर्तिः श्रीरामचन्द्रः। अस्याः रचनासु अन्तिम मिदं काव्यं उत्तमोत्तमं सद्भासते। वासिष्ठरामायणं भक्तानां भागवतमिव कर्मयोगिनां भगवद्गीतेव ज्ञानमार्गानुयायिनां पारायणग्रन्थः भवति। कर्मज्ञानयोगौ द्वावपि रसवत्तरोपाख्यानद्वारा, दृष्टान्तद्वारा काव्यशैल्यां सोपानक्रमेण इयं विशदीकृतवती।

अत्रोपख्यानानि पञ्चाशत् संक्षिप्तीकृतानि स्वानुभवेन रचितानि।

वैराग्यप्रकरण-मुमुक्षुव्यवहारप्रकरण - उत्पत्तिप्रकरणानि आदिप्रकरणनाम्ना अनया संक्षिप्तीकृतानि।

**स्थितिप्रकरणम् -** अत्रोपख्यानानि द्वितीयप्रकरणरूपं प्राप्तानि।

**निर्वाणप्रकरणम् -** आन्ध्रभाषायां चतुर्थ पञ्चमप्रकरणत्वेन परिणतानि। निर्वाणप्रकरणप्रामुख्यबोधनायैव अयं परिणामः वेङ्गमाम्बया कृतः। इयं फलश्रुतिव्याजेन काव्यमिदं सकलपुरुषार्थप्रदं विमलमोक्षकारकमिति तापत्रयार्णव तारकमिति च प्रोक्तवती।

**श्रीरामसदृशः शिष्यः वशिष्ठसदृशो गुरुः।**
**वासिष्ठसदृशं काव्यं न भूतो न भविष्यति ॥**



सर्वेभ्यः
'सप्तगिरि'
पाठकेभ्यः
दीपावली शुभाशयाः



तिरुमल स्वामिनः 18-09-2023 तः 26-09-2023 पर्यन्तम् आयोजित 'सालकट्ल ब्रह्मोत्सव' कार्यक्रमेपीत वस्त्राणि आन्ध्रप्रदेश राष्ट्र मुख्यमन्त्रिवर्यः गौ।। श्री वै.एस्.जगन्मोहन रेड्डि महोदयः समर्पितवन्तः। अपि च ति.ति.दे. नूतन पञ्चाङ्गस्य २०२४ आविष्करण दृश्यानि। मुख्यमन्त्रिणः स्वामिनः चित्रपटं तीर्थप्रसादान् च ति.ति.दे. पालकमण्डलि अध्यक्षः श्री भूमन करुणाकर रेड्डि महोदयाः दत्तवान् ।
अस्मिन् कार्यक्रमे ति.ति.दे. कार्यनिर्वहणाधिकारी श्री ए.वि.धमरिड्डि ऐ.डि.ई.एस्., अर्चकाः उन्नताधिकारिणः च भागं गृहीतवन्तः।










तिरुमल श्रीस्वामिनः 18-09-2023 तः 26-09-2023 पर्यन्तम् आयोजित 'सालकट्ल ब्रह्मोत्सव कार्यक्रमे वाहनसेवाः दृश्यानि। वाहन सेवायां पालकमण्डलि सदस्याः, कार्यनिर्वहणाधिकारी, सम्युक्त कार्यनिर्वहणाधिकारी, उन्नताधिकारिणः , अर्चकाः भक्ताः च भागं गृहीतवन्तः।

















**तिरुमल श्रीस्वामिनः 18-09-2023 तः 26-09-2023 पर्यन्तम् आयोजित 'सालकट्ल ब्रह्मोत्सव कार्यक्रमे वाहनसेवानां दृश्यानि। अस्मिन् कार्यक्रमे ति.ति.दे पालकमण्डलि अध्यक्षः श्री भूमन करुणाकररेड्डि दम्पत्यः, ति.ति.दे. कार्यनिवहणाधिकारी श्री ए.वि.धर्मारेड्डि ऐ.डि.ई.एस्., दम्पत्यः, ति.ति.दे. सम्युक्त कार्यनिर्वहणाधिकारिणः श्रीमति सदाभार्गवी ऐ.ए.एस्, श्री वि.वीरब्रह्मम् ऐ.ए.एस्., जीयर् स्वामिनः, अर्चकाः, अन्ये प्रभृतयः, अशेष भक्तजनाः च भागं गृहीतवन्तः।**










तिरुचानूरु श्री पद्मावती देव्याः 27.09.2023 तः 29.09.2023 पर्यन्तम् आयोजित 'पवित्रोत्सव कार्यक्रम' दृश्यानि। अस्मिन् कार्यक्रमे ति.ति.दे. सम्युक्त कार्यनिर्वहणाधिकारी श्री वि.वीरब्रह्मम् ऐ.ए.एस्., दम्पत्यः, अर्चकाः च भागं गृहीतवन्तः।















तिरुपति गोविन्दराजस्वामिनः पवित्रोत्सव कार्यक्रमाः 25-09-2023 तः 27-09-2023 पर्यन्तम् अत्यन्त वैभवेन आयोजितः।





श्री न च रघुनाथाचार्यप्रणीता

# श्रीशेषाद्रीशस्तुतिः

## सुवर्णसौरभव्याख्यासमेता

(तदनन्तरम्)

व्याख्याता - डा. कन्दाल लक्ष्मीनारायणः - नेल्लूरु

चरवाणी - ९९८५२३७३५३

लक्ष्मीप्रार्थनम्

**श्लो.७. सृष्टिस्थितिप्रलयरूपतया प्रसिद्धा**
**नाट्यक्रिया रसघना भुजगाद्रिभर्तुः।**
**यन्मानसप्रसदनैकफलः प्रयासः**
**वृष्टिं रमा शुभमयीं मयि सा कृषीष्ट॥**

ता - भगवतः शेषाचलपतेः लीलयाप्रवृत्तः जीवजडात्मकप्रपञ्चस्य सृष्टिस्थितिप्रलयनिर्वाहः नाट्यरूप एव। देवदेवः सर्वं च तत्कार्यं स्वप्रेयस्याः श्रीदेव्या आनन्दायैव स्वेच्छया प्रवर्तयति। एवं भगवत्प्रीतिविषयभूता लक्ष्मीदेवी मह्यं मङ्गलसमृद्धिं प्रदिशतु।

सु.सौ.व्याख्या - इतः प्रभृति पञ्चभिः श्लोकैः शेषशैलविभोः पत्नीनां, विष्वक्सेनस्य दिव्यसूरीणां च वैभवः प्रस्तूयते। तत्रादौ अस्मिन् श्लोके महालक्ष्मीः प्रार्थ्यते।

सृष्टि ... भुजगाद्रिभर्तुः - जीवप्रकृति रूपस्य समस्तप्रपञ्चस्यापि सृष्टेः पालनस्य, लयस्य च एकैकं कारणं परमात्मा श्रियःपतिः। श्रूयते हि तैत्तिरीयोपनिषदि - यतो वा इमानि भूतानि जायन्ते.... तद्ब्रह्म'' इति सकलं भूतजाल मपि ब्रह्मण एवोत्पद्यते, उत्पन्नं च तेनैव रक्ष्यते, तस्मिन्नेव प्रलीयते, मोक्षदशायां तदेव प्राप्नोतिं - इत्यर्थः। उक्तं च भागवतमहापुराणे - ''यस्मिन्निदं यतश्चेदं .... स्वयम्भुवम्' ८.३.३. इति। एतं गीतासु भगवता स्वयमेव प्रतिपादितम् - अहं कृत्स्नस्य जगतः प्रभावः प्रलयस्तथा -७.६. इति।

ब्रह्मणः निमित्तकारणत्वम् उपादान कारणत्वं च सुविशदं निरूपितमेवं छान्दोग्ये - तदैक्षत बहुस्यां प्रजायेय इति - प्रलयकालेसद्रूपब्रह्मैव स्वयं समकल्पयत् अहमेव जगद्रूपेणं उत्पत्स्यामि इति। एवं जगतो निमित्तकारणभूतः परमात्मा



स्वकीयेन सङ्कल्पमात्रेणैव लीलया चेतना चेतनात्मकं जगत् प्रवर्तयति। लीला नाम प्रयोजनभूतोऽनायसव्यापारः। श्रुतिस्मृत्यादिषु प्रसिद्धमेवैतत्। इदमेवात्र शेषाद्रिनाथस्य नाट्यक्रियात्मना रूप्यते। नाट्यं नाम रङ्गस्थले नटकर्तृकेण गानकलितेन हस्तपादादिगात्र विन्य सरूपेण अभिनयेन सम्पश्यतां सामाजिकानां रसानुभव मापादयन्ती लास्यप्रक्रिया। तत्र नटाः केचन विहरन्ति। केचन हसन्ति। केचन क्रुध्यन्ति। केचन रुदन्ति। केचन शान्तिं प्रकटयन्ति। नाट्ये सर्वेऽपि नटाः सूत्रधारस्य शासनम् अनुसृत्य नटन्तीति सुविदितमेतत्। एवमेव विचित्रतर नानारसात्मक जगन्निर्वहण प्रक्रियाऽपि नाट्यतुल्या। तत्र सूत्रधारः परमात्मा श्रीनिवासःतेन नियमिताः जीवरूपास्सर्वे नटाः स्वकर्मानुसारेण सुखदुःखात्मकं फलम् अनुभवन्तो विविधं चेष्टन्ते।

**रसघना** - रसपूर्णा इति यावत्। यथा नाट्यक्रया शृङ्गारादि नवरसपूर्णा, तथैव संसारेऽपि शृङ्गरादीनां सर्वेषां रसानां विस्तरेण प्रवृत्तेः सृष्ट्यादिप्रक्रियाऽपि रसप्रचुरा भवति।

**यन्मानस...प्रयासः** - पुरुषोत्तमस्य सृष्ट्यादिव्यवसायः यस्याः रमायाः मनसि प्रीतिजननायैव भवति सा लक्ष्मीः मद्विषये शुभपरम्परां सर्वातिशायि मङ्गलं कल्पयतु इति भावः। ''अस्येशाना जगतो विष्णुपत्नी'' इति श्रुता श्रीदेवी भगवता सङ्कल्पिते जगत्सृष्ट्यादिरूपे यज्ञकार्ये पत्नीत्वेन सर्वधा अधिकृता भवति। तस्या इङ्गितम् अनुसृत्यैव नारायणः ईश.ईशितव्यरूप निम्नोन्नत जगत् सृजतीति श्रीवत्सचिह्नमिश्राः दिव्यदम्पत्योः क्रीडावैभवम् अभिवर्णयन्ति एवम् -

**स्वस्ति श्रीर्दिशतात् अशेषजगतां सर्गोपसर्गस्थितीः**
**स्वर्गं दुर्गति मापवर्गिकपदं सर्वं च कुर्वन् हरिः।**
**यस्या वीक्ष्य मुखं तदिङ्गितपराधीनो विधत्तेऽखिलं**
**क्रीडेयं खलु नान्यथाऽस्य रसदा स्यादैकरस्यात्तया।**

श्रीस्तव-१

पराशरभट्टारकवर्या अपि भगवान् लक्ष्म्याः सदरहासविनोदायैव पञ्चभूतानि, मनोबुद्ध्यहङ्कारान्, इन्द्रियाणि, आवरणसहितं ब्रह्माण्डसहस्रं च सृष्ट्वा तेषु शब्दादि विषयजातं तद्भोक्तृवर्गं च सृजतीति प्रस्तुवन्ति -

''शब्दादीन् विषयान्..... परीहासात्मने केलये - श्रीगुण-२० इति।।

**शुभमयीं वृष्टिम्** - वृष्टिमिव सन्ततां मङ्गलानां समृद्धिम् इति भावः। ''रमा मङ्गलदेवतां'' अमर-१.२७ इति कोशप्रसिद्ध्या तत्सन्निधौ मङ्गलप्रार्थनं समीचीनम्।।

वसन्ततिलकवृत्तमिदम्। लक्षणम् - ''उक्ता वसन्ततिलका तभजा जगौगः'' - इति।।

(अनुवर्तिष्यते)

# तिरुचानूरु
## श्री पद्मावतीदेव्याः ब्रह्मोत्सवाः
**२०२३ नवम्बर् १० तः १८ पर्यन्तम्**



**१०-११-२०२३ भृगुवासरः**
प्रातः - ध्वजारोहणम्
रात्रौ - लघुशेषवाहनम्

**११-११-२०२३ मन्दवासरः**
प्रातः - महाशेषवाहनम्
रात्रौ - हंसवाहनम्

**१२-११-२०२३ भानुवासरः**
प्रातः - मौक्तिकमण्डपम्
रात्रौ - सिंहवाहनम्

**१३-११-२०२३ इन्दुवासरः**
प्रातः - कल्पवृक्षवाहनम्
रात्रौ - हनुमद्वाहनम्

**१४-११-२०२३ भौमवासरः**
प्रातः - पल्लक्युत्सवः
सायं - वसन्तोत्सवः
रात्रौ - गजवाहनम्

**१५-११-२०२३ सौम्यवासरः**
प्रातः - सर्वभूपालवाहनम्,
स्वर्ण रथोत्सवः
रात्रौ - गरुडवाहनम्

**१६-११-२०२३ बृहस्पतिवासरः**
प्रातः - सूर्यप्रभवाहनम्
रात्रौ - चन्द्रप्रभवाहनम्

**१७-११-२०२३ भृगुवासरः**
प्रातः - रथोत्सवः
रात्रौ - अश्ववाहनम्

**१८-११-२०२३ मन्दवासरः**
प्रातः - चक्रस्नानम्, पञ्चमीतीर्थ
रात्रौ - ध्वजावरोहणम्

(तदनन्तरम्)

अयं पर्वतः पृथिव्या अन्येभ्यः पर्वतेभ्यः बहु भिन्नः अस्ति। श्रीमान् नारायणः स्वपत्नीभिः सह परिवारेण सह अस्मिन् पर्वते निवसति विहारं च करोति। अतः क्रीडाद्रि इति उच्यते। गरुडः श्री वैकुण्ठात् क्रीडाद्रिम् आनयत्, एतत् पृथिव्यां स्थापितवान् अतः अस्य गरुडाद्रीति नाम प्राप्तम्। इदानीं पुराणिकं प्रमाणं वक्ष्यामि। शृणुत, श्रीमान् नारायणः शेषशायी इति उच्यते यतः सः शेषस्य उपरि निद्रां करोति। अयं पर्वतः शेषाकारः दृश्यते। अतः अयं पर्वतः शेषाचलम् अथवा शेषाद्रि इति उच्यते।

वृषः धर्मः इति उच्यते। अयं पर्वतः धर्मरूपः अस्ति। एतत् दिव्यं स्थानं यत् जनान् धर्मपालनस्य मार्गदर्शनं करोति। अतः अयं पर्वतः वृषाद्रिः इति उच्यते। इदानीम् अहं भवद्भ्यः पारमार्थिकं वक्ष्यामि। अयं पर्वतः सङ्कटहरणानाम् अमृत बीजाक्षराणाम् उत्पत्तिस्थानम् अस्ति। अतः वेङ्कटाद्रिः इति निर्दिश्यते। यत् मया भवद्भ्यः उक्तं तत् श्री वेङ्कटाचलस्य अत्यल्पानि नामानि सन्ति। अयम् अतीव महान् पर्वतः यस्य माहात्म्यं चतुर्मुखब्रह्मणा पञ्चमुखशिवेन, न वा सहस्रशीर्षेण शेषेण अपि वर्णयितुं न शक्यते, कल्पकालोऽपि न पर्याप्त श्रीवेङ्कटाचलस्य माहात्म्यवर्णनार्थम्।




- ई.पार्थसारथिः
चरवाणी - ६३००६४९९६२

इति सूतस्य वचनं श्रुत्वा, श्री हरिलीलाविलासं एवं वैभवं वर्णयति इति शौनकादय आह।

सूतमहर्षिः मुनिभ्यः वेङ्कटाचलस्य अन्यनामानि बहु विस्तारेण अवदत्। सः तादृशं व्याख्यातुम् आरब्धवान् यत् सामान्याः जनाः अपि अवगन्तुं शक्नुवन्ति। अस्मिन् सन्दर्भे मुनिभ्यः अवदत् यत् पर्वतस्य वेङ्कटाद्रिः इति नाम किमर्थं प्राप्तम्। सम्पदः नानारूपाः तथापि लोकः क्षणिकः। सः स्पष्टं कृतवान् यत् केवलं वेङ्कटाद्रिः एव भवन्तम् अमृतसम्पदं दातुं शक्नोति। यज्ञयागानां विषये सूतमुनिं तस्य विषये व्याख्यातुं पृष्टवन्तः। सूतमुनिः तान् एवं कथयितुम् आरब्धवान्। श्रीहरिः श्रीदेव्या सह क्रीडापर्वते निवासं करोति स्म। तस्मिन्नेव काले सुदूरात् मुनयः क्रीडापर्वतम् आगतवन्तः। ते सर्वेपि क्रीडाद्रिं दृष्ट्वा सन्तुष्टाः। पर्वते सर्वत्रापि नानाविधपरिमलपुष्पाणि सन्ति, एवम् च प्रकृतिम् अवलोक्य मुदिताः। प्रकृतेः सौन्दर्यं दृष्ट्वा प्रसन्नाः आसन्। ते सर्वेपि मुग्धा अभवन्। एतादृशं प्रदेशं विहाय अन्यत्र कुत्र क्वापि कुतः गन्तव्यम् इति चिन्तयित्वा तत्रैव सः कर्तव्यः इति निर्णयम् अकरोत्। निवासार्थं पर्णशालायाः निर्माणम् अपि अभवत्। मुनयः सर्वलोककल्याणार्थम् एकं यज्ञं करणीयम् इति सङ्कल्पितवन्तः। यागनिर्वाहणार्थं सर्वे कार्योद्युक्ताः।

एतत् सर्वं दृष्ट्वा श्रीहरिः सिन्धुकन्याम् अवदत् "लक्ष्मि! पश्यतु, सर्वे ऋषयः क्रीडाद्रिसौन्दर्येण प्रसन्नाः आसन्। अधुना लोकहिताय यज्ञं कर्तुम् इच्छन्ति इति भाति। ते किं कुर्वन्ति इति मायावेषेण तत्र गत्वा पश्यामः किम्? अहम् विटवेषं गृह्णामि त्वं च विश्वमोहिनीरूपं गृहीत्वा माम् अनुगच्छसि। श्रीमन्नारायणः

विटवेषं च देवी लक्ष्मीः विश्वमोहिनीरूपं स्वीकृतवन्तौ। तौ यज्ञमण्डपस्य समीपे श्रमितुम् आरब्धवन्तौ। तं पश्यन्तः महर्षयः चिन्तयन्ति'' कः सः, कियत् महान् दृश्यते, इन्द्रः वा चन्द्रः शिवः वा मन्मथः वा वसन्तमाधवः वा नलः वा? पश्यतु, तस्य यज्ञोपवीतं सः ब्राह्मणः, न सः ब्राह्मणः न भवेत् तस्य दिव्यायुधम् पश्यतु, कदाचित् सः क्षत्रियः स्यात्। स तु विटः इति मनसि महर्षयः चिन्तयन्ति स्म। तदा दम्पती उभौ महर्षिगणे प्रविश्य तत्र उपविष्टौ। उभौ ताम्बूलसेवनम् आरब्धवन्तौ। तत् ताम्बूलं महतीं कस्तूरीपूर्णं गन्धम् उत्सर्जयति। किञ्चित्कालानन्तरं महर्षयः तं पुरुषं पृष्टवन्तः'' राजन्! कोऽसि? किं तव नाम? कौ तव मातापितरौ? कुत्र निवससि? किं करोषि अस्मिन् निर्जनारण्ये? भवतः उपस्थित्या वयं बहु प्रसन्नाः। लोककल्याणार्थं यज्ञं कुर्मः। अस्माकम् अनुरोधः अस्ति, कृपया अस्माकं साहाय्यं करोतु। यज्ञस्य भवान् रक्षकः भव सर्वविघ्नेश्यः यज्ञं रक्ष। सर्वलोकार्थे यज्ञं कुर्मः। क्षत्रियः यज्ञस्य राक्षकः, यज्ञस्य निर्वाहकत्वे अस्माकं साहाय्यं करोतु इति मुनयः अवदन्''।

श्रुत्वा चक्रीः मन्दस्मितं कुर्वन् अवदत् ''हे ऋषयः अहम् न ब्राह्मणः न क्षत्रियः। अहं वैश्यः। अहं नाम, गोत्र विहीनः, मम पितरः नासन्। अहम् अनाथः मम गृहम् अथवा निवासस्थानं नास्ति। अहं रूपरहितः। सर्वत्र वसाम्यहम्। सर्वेषु स्थास्याम्यहम्। नास्ति मम रूपं, न सन्ति मम वयोगतः आश्रमधर्माः। मम पार्श्वे उपविष्टायाः च स्त्री विषये वा पृष्टं किल, अहं न जानामि का सा इति। सा मया सह आगन्तुं आरब्धा, अहं केवलं चलन् एव आसम्। अहं भवन्तं एकं विषयं प्रष्टुं इच्छामि, अन्यथा मां चिन्तयन्तु। लयात्मकं स्तोत्रं गीतं च यत् श्रूयते, किं तत् गीतम्, अहं कदापि तस्य विषये न श्रुतवान्। कस्मात् अग्निकुण्डम् अत्र अस्ति? किमर्थं मृत्तिकापात्राणि सन्ति? किमर्थं पशवः बद्धाः सन्ति? सः व्यक्तिः ऋषिभ्यः प्रश्नान् पृष्टवान् यथा बाणप्रवाहः इव। सर्वम् श्रुत्वा यज्ञकुण्डसमीपे ऋ षयः दम्पतिपार्श्वे उपविष्टान् अन्यान् ऋषीन् आगन्तुम् आहूतवन्तः तथा च वपा होमं आरभ्यत इति समयात्।

महर्षयः अग्निकुण्डस्य समीपं गत्वा वेदोक्तमन्त्रान् प्रारभन्त। ते वाप होमं कृतवन्तः। चतुर्भुज शंखचक्रगदापद्म युक्तः श्री महाविष्णुः प्रकटितः। ऋषिभ्यः वापं स्वीकृतवान्। एतत् दृष्ट्वा ऋषयः विस्मिताः भूत्वा स्तब्धाः प्रतिमा इव स्थिताः। श्रीमहाविष्णुः सहस्रसूर्य इव दीप्तः। सः ऋषिभ्यः अवदत् ''हे ऋषयः। अहं अतीव प्रसन्नः यतः भवन्तः लोककल्याणार्थम् यज्ञं कुर्वन्ति''। इत्युक्त्वा सः अन्तर्धानं जातः।

वयं बहु धन्याः स्मः, सर्वे अतीव भाग्यशालिनः स्मः। यज्ञकर्ता यज्ञभर्ताश्च श्रीमन्नारायणः अस्माकं पुरतः प्रकटितः तथा च वापं स्वीकुर्वन् खलु अस्माकं पुराकृतं पुण्यम्। पूर्वं कदापि न श्रुतं, साक्षीकृतं वा नासीत्। वयं अतीव भाग्यवन्तः स्मः यत् एतस्याः घटनायाः साक्षिणः स्मः। न केवलं एतत् वयं श्रीमहालक्ष्मीं श्रीमन्नारायणं मांसनेत्रैः द्रष्टुं समर्थाः अभवाम। एतत् केवलं जन्मसहस्राणां कृत पुण्यफलम्। अस्तु, यज्ञः समाप्तः भवितुमर्हति। यज्ञं समापयितुं अवभृथस्नानं कर्तव्यम्। अवभृथस्नानं कृतवन्तः अन्ते सम्पूर्णः यज्ञः समाप्तः।'' सूत महर्षिः सर्वान् ऋषीन् एवमुवाच। इदानीं सर्वे सूत महर्षीन् अन्यवृत्तान्तान् व्याख्यातुं सर्वे प्रार्थितवन्तः।

(अनुवर्तिष्यते)



## सेप्टेम्बर् २०२३
## लघुप्रश्नोत्तरी समाधानानि

१. अरिष्टनेमिः
२. सुमहुः
३.आदिवराह क्षेत्रम्
४.गोविन्दराज पुरम्
५. लक्ष्मणः
६. जय संहिता
७. बृहस्पतिः
८.शिवपुराणम्
९.सुतलः
१०.जयद्रथः
११. चित्रकः
१२. कर्णस्य
१३. शर्मिष्ठा
१४.ययातिः
१५.देवल महर्षेः

चित्रकथा

# पद्मव्यूहः

तेलुगुमूलम् - श्री डी.श्रीनिवास दीक्षितुलु
चित्राणि - श्री के.तुलसी प्रसाद
संस्कृतानुवादः - का. भास्करः
चरवाणी - ८९४३१५०८३३

अर्जुनसुभद्रयोः पुत्रः अभिमन्युः। श्रीकृष्णस्य सविधे बाल्यं यापितवान्। सः महान् वीरः। कुरुक्षेत्र युद्धः प्रारम्भं भूत्वा त्रयोदशदिनानि जातः। द्रोणः सैन्याधिपति रुपेण भूत्वा पद्मव्यूहम् अरचयत्। राराजं प्रति द्रोणः....




पद्मव्यूहः इति नम शृण्वन्नेव धर्मराजः व्याकुलः जातः। अनन्तरम् अभिमन्युं प्रति धर्मराजः.....







अभिमन्योः रथं व्यूहे वेगेन अगच्छत्। रथस्य पुरतः आगच्छन्तः पाण्डवाः सैन्धवेन निरोधिताः



अभिमन्युः पद्मव्यूहे एकाकी जातः। तथापि धैर्येण युद्धं कुर्वन् अस्ति। शत्रून् वधन् अस्ति। वीराः...




रणरङ्गे सर्वे वीराः भीताः, कर्णः इव वीराः अपि अभिमन्योः पराक्रमं दृष्ट्वा पलायिताः जाताः। द्रोणाचार्यः अभिमन्योः पराक्रमं दृष्ट्वा......




दुर्योधनस्य अतीव क्रोधम् आगतम्। पुत्रशोकमपि जातम्।




द्रोणस्य अङ्गीकारेण सर्वे अधर्मयुद्धं कृतवन्तः। राराज...

अतिरथाः, महारथाः मिलित्वा युद्धं कुर्वन्तु। बाणवृष्टिं कुर्वन्तु। रथस्य नाशनं कुर्वन्तु।
सारथिं ... अश्वान् मारयन्तु...



सर्वतः व्रणाः... आयुधमपि नास्ति। शक्तिः नाशिता! तथापि अभिमन्युः गदेन दुश्शासनस्य कुमारेण सह युद्धं कृत्वा मृतः। वीरमरणम् प्राप्तः।




सूर्यः पश्चिमे दिशि अस्तंगतः। बालभानुः अपि अस्तंगतः।




स्वस्ति



सर्वेजनाः सुखिनो भवन्तु।

प्रदत्तं चित्रपटम् बिन्दुसाहाय्येन पूरयामः वा?

अस्य चित्रपटस्य रञ्जनं कुर्मः वा?

बा
ल
वि
नो
दि
नी



## रसप्रश्नाः

१. अर्जुनस्य ब्रह्मास्त्र प्रदाता कः?

२. उत्तरायाः पतिः कः?

३. एकलव्यस्य पिता कः?

४.महाभारतयुद्ध प्रारम्भः कः कृतवान्?

५.लाक्ष्यगृह निर्माता कः?

६.गान्धारी देव्याः सहोदरः कः?

(समाधानानि - १. द्रोणाचार्यः २. अभिन्युः ३. हिरण्य धन्यः ४. दुश्शसनः ५. पुराचवः ६. शकुनिः)








(१. दीपस्य समीपे पुष्पमाला नास्ति २.दाडिमी फलं नास्ति ३.कदली फलं नास्ति ४.रङ्गवल्ली नास्ति ५. भित्योपरि वल्लिका नास्ति ६. कदली गुच्छं नास्ति ७. तोरणं नास्ति)



# लघुप्रश्नोत्तरी



तिरुमलतिरुपतिदेवस्थानानि



१६

ऐदंप्राथम्येन सप्तगिरिमासपत्रिकायां लघुप्रश्नोत्तरी इति स्पर्धाकार्यक्रमः आयोजितः यत्र एतन्मासीयपत्रिकायां प्रकटितविषयाधारिताः प्रश्नाः भवेयुः। अतः हे बालबालिकाः! प्रतिमासम् इमां पत्रिकां पठित्वा उत्तरदानप्रक्रियायां सक्रियं भागं वहन्ति खलु!

१. श्री रामस्य वंशस्य नाम किम् ?
२. महाविष्णोः द्वारपालकौ कौ?
३. ओंकार स्मरणं करणीयम् इति कस्य वेदस्य उक्तिः?
४. आदित्यहृदयस्य कर्ता कः?
५. कुन्तीदेव्याः मन्त्रोपदेश मुनिः कः?
६. भीष्माय स्वच्छन्दमरण वरं कः दत्तवान्?
७. महाभारते कौरवपाण्डवयोः युद्धं कतिदिनानि जातम्?
८.शन्तनस्य प्रथम पत्नी का?
९. कर्णस्य पितरौ कौ?
१०. भीष्मस्य निजनाम किम्?
११. दुश्शासनं कः मारितवान्?
१२. भीष्मः इति पदस्य अर्थः कः?
१३. भीष्मस्य मरणकारका का?
१४. दुर्योधनः यदा जातः तदा कस्य जन्तोः अनुकरणं कृतवान्?
१५. कर्णस्य गुरुः कः?

| समाधानानि |
|---|
| १. |
| २. |
| ३. |
| ४. |
| ५. |
| ६. |
| ७. |
| ८. |
| ९. |
| १०. |
| ११. |
| १२. |
| १३. |
| १४. |
| १५. |

## नियमावालिः

१. केवलं १० तः १५ वर्षीयाः बालाः हैन्दवाः अत्र भागं ग्रहीतुमर्हन्ति।
२. बालकर्णस्य गुरुः कः? परशुरामःयाम् एव उत्तरं विलिख्य तत्पत्रं **The Chief Editor Office, Sapthagiri, T.T.D. Press Compound, K.T.Road, Tirupati 517507,** प्रति २५ दिनाङ्कात् पूर्वं प्रेषयेयुः। प्रतिकृतीः (Xerox) नैव स्वीक्रियन्ते।
३. बालानां पितरौ मासपत्रिकाग्रहीतारः (Subsribers) भवेयुः। तत्र नाम, सङ्केतः, दूरवाणीसङ्ख्या च उत्तरपत्रिकायां देया एव।
४. समाधानेषु त्रुटयः, समीकरणानि च न भवेयुः।
५. सर्वेषां प्रश्नानां समीचीनसमाधानं दत्तवतां त्रयाणां बालानां चयनं DIP द्वारा क्रियते।
६. विजेतृणां नामानि अग्रिममासीय सप्तगिरि पत्रिकायां प्रचुरितानि भवन्ति।
७. Chief Editor कार्यालयीयकार्यकर्तृपुत्रपुत्रिकाणां च अत्र अवकाशो नास्ति।
८. अस्य कार्यक्रमस्य समाचारः दूरवाणीद्वारा नैव दीयते।
९. प्रश्नोत्तयाः उत्तराणि प्रेषयितुम् अन्तिमतिथिः २५.११.२०२३ अस्ति।

**Subscription Number** :
**Name** :
**Mother** :
**Father** :
**Address** :
**Phone Number** :

Printed by Sri P. Ramaraju, M.A., and Published by Dr. K. Radha Ramana, M.A., M.Phil., Phd., on behalf of Tirumala Tirupati Devasthanams and Printed and Publised at Tirumala Tirupati Devasthanams Press, K.T. Road,Tirupati 517 507. Editor : Dr.V.G. Chokkalingam, M.A., Ph.D.



SAPTHAGIRI (SANSKRIT) SPIRITUAL ILLUSTRATED MONTHLY PUBLISHED BY TIRUMALA TIRUPATI DEVASTHANAMS
PRINTING ON 25-10-2023 & posting at Tirupati RMS Regd.with the Registrar of Newspapers for
India under RNI No.21138/1970 Postal Regd. No. TRP/154/2021-2023" LICENCED TO POST
WITHOUT PREPAYMENT No.PMGK/RNP/WPP-04(4)/2021-2023" Posting on 5th of every month.

तिरुचानूरु
श्री पद्मावती देव्याः पञ्चमीतीर्थ
महोत्सवः 18-11-2023